# अन्त्येष्टिदीपिका ।

श्रीमद्राजाधिराजश्रौतस्मार्त्तानुष्ठानतत्परोदयप्रता-
पाद्यादत्तदेववर्मसोमयाजिनो निदेशेन
सुब्रह्मण्यविदुषा विरचिता ।

पुरुषोत्तमशास्त्रिणा-सूर्यनारायणदीक्षितेन च लेखकप्रमादा-
दिदोषान् यथामतिपरिशोध्य


काश्याम्

प्राभाकरी नामक यन्त्रालये मुद्रिता ।


एतदङ्कनकार्यसम्पादकः ।

भिनूगाराजवराश्रितो विनयवान्धीमान्त्सदाचारवान्
रामानन्दइतिव्युपाधिविदितानन्ताग्निहोत्र्यात्मजः ।
चक्रे श्रीपुरुषोत्तमः प्रभुमुदे सम्यग्विविच्याङ्कनम्
चेदस्मिन्स्वरवर्णजं यदधिकं न्यूनं च शोध्यं बुधैः ॥

विक्रमाब्दे १९६२ ई० १९०५ ।

# अन्त्येष्टिदीपिकानुक्रमणिका।



इत्यन्त्येष्टिदीपिकानुक्रमणिका समाप्ता ॥

॥ श्रीगणेशाय नमः ॥

# अन्त्येष्टिदीपिका ।

अथैतरेयारण्यकोक्तमरणचिन्हानि लिख्यन्ते । स यश्चायमशरीरः प्रज्ञात्मा यश्चासावादित्य एकमेतदित्यवोचाम, तौ यत्र विहीयेते, चन्द्रमा इवादित्यो दृश्यते, न रश्मयः प्रादुर्भवन्ति, लोहिनी द्यौर्भवति यथा मञ्जिष्ठा, व्यस्तः पायुः काककुलायगन्धिकमस्य शिरो वायति, सम्परेतोऽस्यात्मा न चिरमिव जीविष्यतीति विद्यात् ॥ ७ ॥ स यत्करणीयं मन्येत तत्कुर्वीत, वदन्ति यच्च दूरक इति सप्त जपेत् । आदित्प्रत्नस्य रेतस इत्येका, यत्र ब्रह्मा पवमानेति षट्, उद्वयं तमसस्परीत्येका ॥ ८ ॥ अथापि यत्र छिद्र इवाऽऽदित्यो दृश्यते, रथनाभिरिवाभिख्यायेत च्छिद्रां वा छायां पश्येत्तदप्येवमेव विद्यात् ॥ ९ ॥ अथाप्यादर्शे वोदके वा जिह्मशिरसं वाऽऽत्मानं पश्येद्विपर्यस्ते वा कन्याके जिह्मेन वा दृश्येयाताम् तदप्येवमेव विद्यात् ॥ १० ॥ अथाप्यपिधायाक्षिणी उपेक्षेत, तद्यथा वटरकाणि सम्पतन्तो दृश्यन्ते तानि यदा न पश्येत्तदप्येवमेव विद्यात् ॥ ११ ॥ अथाप्यपिधाय कर्णौ उपशृणुयात्, स एषो अग्नेरिव प्रज्वलतो यदा न शृणुयात्तदप्येवमेव विद्यात् ॥ १२ ॥ अथापि यत्र नील इवाग्निर्दृश्यते

यथा मयूरग्रीवाऽमेघे वा विद्युतं पश्येन्मेघे वा विद्युतं न पश्येन्महामेघे वा मरीचिरिव पश्येत, तदप्येवमेव विद्यात् ॥ १३ ॥ अथापि यत्र भूमिं ज्वलन्तीमिव पश्येत् तदप्येवमेव विद्यात् ॥ १४ ॥ इति प्रत्यक्षदर्शनानि ॥ १५ ॥ अथ स्वप्नाः ॥ १६ ॥ पुरुषं कृष्णं कृष्णदन्तं पश्यति, स एनं हन्ति, वराह एनं हन्ति, मर्कट एनमास्कन्दयत्याशु वायुरेनं प्रवहति, सुवर्णं खादित्वाऽपगिरति, मध्वश्नाति, विषाणि भक्षयत्येकपुण्डरीकं धारयति, खरैर्वराहैर्युक्तैर्याति, कृष्णां धेनुं कृष्णवत्सां नलदमाली दक्षिणमुखो व्राजयति ॥ १७ ॥ सपद्येतेषां किञ्चित्पश्येदुपोष्य पायसं स्थालीपाकं श्रपयित्वा, रात्रीसूक्तेन प्रत्यृचं हुत्वा, ऽन्येनान्नेन ब्राह्मणान्भोजयित्वा, चरुं स्वयं प्राश्नीयात् ॥ १८ ॥ स यो ऽतो ऽश्रुतो ऽगतो ऽमतो ऽनतो ऽदृष्टो ऽविज्ञातो ऽनादिष्टः श्रोता मन्ता द्रष्टा देष्टा घोष्टा विज्ञाता प्रज्ञाता सर्वेषां भूतानामान्तरपुरुषः स म आत्मेति विद्यात् ॥ १९ ॥

अथ कौषीतकिब्राह्मणोक्तपितापुत्रीयसम्प्रदानं लिख्यते । अथातः पितापुत्रीयं सम्प्रदानमिति चाचक्षते, पिता पुत्रं प्रेष्यन्नाह्वयति नवैस्तृणैरगारं संस्तीर्याग्निमुपसमाधायोदकुम्भं सपात्रमुपनिधायाहतेन वाससा सम्प्रच्छन्नः पिता शेत एत्य पुत्र उपरिष्टादभिनिपद्यत इन्द्रियैरिन्द्रियाणि संस्पृश्यापि वास्मा आसीनायाभिमुखायैव सम्प्रदद्यादथास्मै सम्प्रयच्छति, वाचं मे त्वयि दधानीति पिता वाचं ते मयि दध इति पुत्रः, प्राणं मे त्वयि दधानीति पिता प्राणं ते मयि दध इति पुत्रः, चक्षु में त्वयि

दधानीति पिता चक्षुस्ते मयि दध इति पुत्रः, श्रोत्रं मे त्वयि दधानीति पिता श्रोत्रं ते मयि दध इति पुत्रो, ऽन्नरसान्मे त्वयि दधानीति पिता ऽन्नरसांस्ते मयि दध इति पुत्रः, कर्म्माणि मे त्वयि दधानीति पिता कर्म्माणि ते मयि दध इति पुत्रः, सुखदुःखे मे त्वयि दधानीति पिता सुखदुःखे ते मयि दध इति पुत्रः, आनन्दं रतिं प्रजापतिं मे त्वयि दधानीति पिता आनन्दं रतिं प्रजापतिं ते मयि दध इति पुत्रः, इत्यां मे त्वयि दधानीति पितेत्यां ते मयि दध इति पुत्रः, मनो मे त्वयि दधानीति पिता मनस्ते मयि दध इति पुत्रः, प्रज्ञां मे त्वयि दधानीति पिता प्रज्ञां ते मयि दध इति पुत्रः, यद्युवा उपाभिगदः स्यात्समासेनैव ब्रूयात् प्राणान्मे त्वयि दधानीति पिता प्राणांस्ते मयि दध इति पुत्रो ऽथ दक्षिणावृदुपनिष्क्रामति तं पिता ऽनुमन्त्रयते यशो ब्रह्मवर्च्चसं कीर्त्तिंस्त्वा जुषतामित्यथेतरः सव्यमन्वंसमभ्यवेक्षते पाणिनाऽन्तर्धाय वसनान्तेन वा प्रच्छाद्य स्वर्गाल्लोकान्कामानाप्नुहीति स यद्यगदः स्यात्पुत्रस्यैश्वर्य्ये पिता वसेत् परिव्रजेत्, यद्युवै प्रेयात्तथैवैनं समापयेयुर्यथासमापयितव्यो भवति यथासमापयितव्यो भवति ॥ १५ ॥ इति मरणचिन्हादिकथनम् ॥

अथान्त्येष्टिप्रयोगः । कथ्यते कौथुमीयानां हितायान्त्येष्टिदीपिका । कर्म्मप्रदीपविधिना सूत्राल्लाट्यायनस्य च ॥ १ ॥ तत्रादावधिकारिनिरूपणम् । पुत्रः पौत्रः प्रपौत्रो दत्तः पत्नी दौहित्रो दुहिता पितरौ भ्रातरस्तत्पुत्रा-

स्ततस्सन्निहितदशरात्रिज्ञातयस्ततस्त्रिरात्रिज्ञातयस्ततः पितृबान्धवा मातृबान्धवाः शिष्या आचार्य्यो राजा एतेषां पूर्वपूर्वाभावे परःपरः कर्त्ता ॥ पुत्रादिबहुत्वे ज्येष्ठो ऽधिकारो । दाहादिकर्मणि पतितपुत्रादयो नाधिकारिणः । अकृतचूडस्य खननम् । कृतचूडस्य दहनम् । मृतस्य मुमूर्षोर्वा पापसंशये प्राच्याङ्गोदीच्याङ्गसहितं परिषद्विधायकानुवादकोपदिष्टं सर्वप्रायश्चित्तं स्मृत्यन्तरोक्तं कुर्यात् । यथासम्भवं स्नानप्रोक्षणवस्त्रान्तरधारणादिकं कारयित्वा, गोमयेनोपलिप्तायाम्भूमौ दक्षिणाग्रकुशेषु दक्षिणाशिरसमुदक्पादमुपवेश्य, गोहिरण्यादिदानानि कारयेत् । पुत्रादिर्वा कुर्य्यात् । स्वशाखोपनिषदं भगवन्नामानि चोच्चैश्श्रावयेत् । ततोवैतरणीगोदानम् ॥ तद्यथा । देशकालौ सङ्कीर्त्य मुमूर्षोर्मम यमपुरीमार्गस्थघोरवैतरणीनदीतरणार्थं गोदानमहं करिष्ये इति सङ्कल्प्योदङ्मुखं ब्राह्मणं यथासम्भवं सम्पूज्य, वैतरणीं नदीं तर्त्तुकाम इमां गां रुद्रदैवतां गोत्राय शर्म्मणे तुभ्यमहं सम्प्रददे न मम । ततः प्राणवियोगं ज्ञात्वा, "घृतेनाभ्यक्तमाप्लाव्य"-इत्यादिना कर्मप्रदीपपरिशिष्टेन केचन विधयो मरणस्थले असम्भवे श्मशानमार्गे वा कर्त्तव्याः ॥ तत्र निरग्निकस्यादौ प्रयोग उच्यते ॥ सति सम्भवे पुत्रादयो ज्ञातयस्सजातयः श्मशानं प्रेतं नयेयुः । कुशान् तिलान्पिण्डार्थमामान्नमपक्वमृन्मयपात्रे गृहीत्वा शवस्य पृष्ठतो गच्छेयुः। न शूद्रादीनां प्रेतस्पर्शनम् । ततः श्मशानार्द्धे मार्गे शवं

स्थापयेत् । ततः पुत्रादिः स्नात्वा, प्राचीनावीती मृतं वापयित्वा, घृतेनाभ्यज्य, सशिरस्कं स्नापयित्वा, पूर्वधृतवस्त्रं निरस्य, नवीनवस्त्रयुगले परिधाय, यज्ञोपवीतानि धारयित्वा, भूमौ दक्षिणाग्रान्कुशानास्तीर्य्य, तत्र दक्षिणाशिरसं शवं संस्थाप्य, चन्दनोदकेन सर्वाङ्गमभ्युक्ष्य, पुष्पैरलङ्कुर्य्यात् । ततः सप्तहिरण्यशकलान्यादाय क्रमेणास्ये, नासिकाद्वये, चक्षुर्द्वये कर्णद्वये, एकैकं प्रक्षिपेत् । घृताभ्यञ्जनात्पूर्वं शवं न वापयन्ति केचित् ॥ ततः कर्त्ता प्रोक्षितायाम्भूमावानीतमामान्नमर्द्धं गृहीत्वा, अमुकगोत्रामुकनामप्रेत एष ते पिण्डः ॥ ततः प्रेतं वस्त्रेणाच्छाद्य श्मशानं नयेयुः ॥ ततः श्मशानदेशं प्राप्तः कर्त्ता दक्षिणाभिमुख आसीनो वामजानु भूमिगतं कृत्वा दक्षिणाग्रेषु कुशेषु अमुकगोत्राऽमुकनामप्रेत अवनेनिक्ष्व पितृतीर्थेन तिलोदकं दद्यात् । तत अवशिष्टमामान्नं गृहीत्वा ऽमुकगोत्रामुकनामप्रेत एष ते पिण्डः । ततः श्मशाने शुचौ देशे शवं स्थापयेयुः । ततः कर्त्ता तूष्णीं स्नात्वा ऽहते वाससी परिधाय, प्राचीनावीती, शुद्धे दक्षिणाप्रवणे भूप्रदेशे शुद्धकाष्ठैश्चितिं कुर्यात् । तूष्णीं प्रोक्षयेत् । ततश्चितौ दक्षिणाशिरसमुदक्पादमुत्तानं शवं संस्थाप्य, कर्त्ता प्राचीनावीती वाग्यतो दक्षिणाभिमुखः सव्यं जान्वाच्य, लौकिकाग्निमादाय, शिरसि दक्षिणशिरोभागे तूष्णीं दद्यात् । अत्र केचित्पुराणोक्तप्रकारेण कर्म कुर्वन्ति । तद्यथा । "कर्त्ता लौकिकाग्निमादायेमं मन्त्रं पठेत्–'कृत्वा सुदुष्करं कर्म जानता वाऽप्यजानता । मृत्युकालवशं प्राप्तो

नरः पञ्चत्वमागतः ॥ १॥ धर्म्माधर्म्मसमायुक्तो लोभमोह-
समावृत्तः दहेऽयं सर्वगात्राणि दिव्यलोकांश्च गच्छति' ॥२॥
इति मन्त्रमुक्त्वा शीघ्रं प्रदक्षिणीकृत्य, शिरोदेशे तृणका-
ष्ठघृतादिकं निधायाग्निं प्रक्षिपेत्'' इति। ततः प्रादेश-
मात्राणि सप्तकाष्ठानि गृहीत्वा, सप्तप्रदक्षिणानि विधाय,
कुठारेण शिरोभागस्योल्मुकोपरि सप्तप्रहारं कृत्वा, क-
व्यादाय नमस्तुभ्यमित्युक्त्वैकैकं काष्ठमग्नौ प्रक्षिपेत्।
काष्ठप्रक्षेपणे मन्त्रावृत्तिः। अत्र 'केचिदारभ्य काष्ठप्रक्षेप-
णान्तं कर्म' कर्मप्रदीपानुक्तत्वात्कौथुमीयानां कृताकृतम्।
ततः कर्त्ता ज्ञातयः शवस्पृशश्चानवलोकयन्तो जलाशयं
गच्छेयुः। ततः सर्वे मुक्तशिखाः प्राचीनावीतिनः सव्यह-
स्तानामिकया जलम् 'अपनः शोशुचदघम्'—इत्यनेन मन्त्रेण
दक्षिणतो निनीय, सकृत्सचैलं स्नात्वाऽऽचम्य, तीरमागत्य,
शुद्धस्थले हस्तयोर्दक्षिणाग्रान्कुशान्कृत्वा, पितृतीर्थेनामु-
कगोत्रममुकनामानं प्रेतं तर्पयामीति सर्वे तिलोदकं दद्युः।
ततः स्नात्वाऽपरवस्त्रं धृत्वा, द्विराचम्य, तीरे मृदु तृणयु-
क्तप्रदेश उपविश्य, शोकापनोदनवाक्यानि वदेयुः। "यथा
कर्मप्रदीपे'-मा शोकं कुरुतानित्ये सर्वस्मिन्प्राणिधर्म्मिणि।
धर्मं कुरुत यत्नेन यो वः सह गमिष्यति ॥ १ ॥ मानुष्ये
कदलीस्तम्भे निस्सारे सारमार्गणम्। यः करोति स
संमूढो जलबुद्बुदसन्निभे'' ॥ २ ॥ तत उत्थायाप्रती-
क्षन्त अधोमुखा गृहं गच्छेयुः ॥ दिवा संस्कारश्चेदस्तम-
यादूर्ध्वं ग्रामं प्रविशेयुः। रात्रौ चेद्रवेरुदयात्परम्। अथवा
विप्रानुज्ञया रात्रावेव गृहं प्रविशेयुः। कर्त्तृसपिण्डव्यति

रिक्ता गृहद्वारसमीपमागत्य, पादौप्रक्षाल्याचम्य, तूष्णीमग्निं स्पृष्ट्वा, घृतं प्राश्य विशुद्ध्येयुः ॥ अथ पिण्डदानविधिः। कर्त्ता नद्यादिजलाशयं गत्वा, स्नात्वा, नूतने वस्त्रे परिधाय, पिण्डदेशस्यैशान्यां दिश्यग्निं प्रज्वाल्य, मृन्मयपात्रे गोपयसि सकृत्प्रक्षालितप्रसृतिद्वयपरिमितांस्तण्डुलान्पक्त्वा दक्षिणस्यामुद्वासयेत्। ततः कर्त्ता गोमयेनोपलिप्ते देशे दक्षिणाग्रं गर्त्तं कृत्वा, तत्र दक्षिणाग्रान्समूलकुशानास्तीर्य्य, सव्यं जान्वाच्य सव्यहस्तेन तिलोदकपात्रं गृहीत्वा, दक्षिणहस्तेन पितृतीर्थेन कुशेषु तिलोदकं दद्यात्। अमुकगोत्रामुकप्रेत अवनेनिक्ष्व—इति तिलोदकम्। ततस्तिलाज्यपयोमधुशर्करामिश्रितं पक्वमन्नं गृहीत्वा, पिण्डं कृत्वा, प्रथमदिनेऽमुकगोत्रस्यामुकप्रेतस्य शिरोऽवयवनिष्पत्त्यर्थममुकगोत्राऽमुकप्रेत एष ते पिण्ड इत्यवनिक्तप्रदेशे स्थापयेत्। पिण्डपात्रक्षालितजलेन तिलोदकेन वा प्रत्यवनेजनम्। गोत्र नाम प्रेत अवनेनिक्ष्व। गोत्र नाम प्रेत एतत्ते ऊर्णावासः। ततो गोत्र नाम प्रेत एतत्ते गन्धाद्युपचारा उपतिष्ठन्ताम्। ततस्तिलतोयदानम्। तत्र ऋजुकुशान् हस्ताभ्यां गृहीत्वा दक्षिणाभिमुखः पितृतीर्थेनामुकगोत्रममुकनामानं प्रेतं तर्पयामीति पिण्डोपरि सकृत्तिलोदकं दद्यात्। द्वितीयदिने द्वयम्। एवमेकैकवृद्ध्याऽऽदशाहं तिलोदकं दद्यात्। ततः पिण्डमप्सु प्रक्षिपेत्। प्रत्यहं पिण्डदानान्ते स्नानम्। तत एकस्मिन्पात्रे उदकं पूरयित्वा त्रिकाष्ठिकायां स्थापयेत्। गोत्र नाम प्रेत दाह-

तापोपशनार्थमत्रोदके स्नाहि । श्रमापनोदनार्थं क्षीरं पिब । एवं पृथक्पृथक् निर्दिशेत् । एवं प्रत्यहमादशाहान्तं कार्यम् । "एकाहं त्र्यहं वा कुर्य्यात्" इति केचित् ॥ ततः कर्त्ता भोजनकाले पात्रस्थं सघृतमन्नमादाय गोत्रायामुकप्रेतायेदमन्नमुपतिष्ठतामिति भोजनपात्रसमीपे दद्यात् । एवमादशाहम् । ततः सायमेकस्मिन्घटे ऽधोभागे छिद्रं कृत्वा जलेनापूर्य्याश्वत्थवृक्षे बन्धनं कुर्य्यात् । अविच्छिन्नधारा यथा स्यात्तथा प्रत्यहं जलेनापूरयेत् । एवं दीपदानमादशाहम् । तद्यथा । सायङ्काले पिण्डस्थले यमपुरीमार्गस्थघोरान्धकारतरणार्थं गोत्र नामामुकप्रेत एष ते दीपो मया दीयते तवोपतिष्ठताम् । दशरात्रमेकस्मिन्देशे पिण्डदानम् । न पात्रव्यत्यासः । अथ नियमाः । दशाहान्तमेकत्र हविष्याशनम् । तैलाभ्यङ्गस्त्रीसङ्गोत्कृष्टवस्त्रधारणास्पृश्यस्पर्शनादीनि सर्वे वर्ज्जयेयुः । रात्रौ भूमौ तृणादिसंस्थिते सर्वे शयनं कुर्य्युः ॥ इति प्रथमदिनकृत्यम् ॥

अथास्थिसञ्चयनम् । तच्च द्वितीये तृतीये दिने वा कुर्य्यात् । "तदुक्तं 'कर्मप्रदीपे'–अपरेद्युस्तृतीये वा अस्थ्नां सञ्चयनम्भवेत्" इति । अथ कर्त्ता गोघृतं गोपयः शमीशाखे पलाशशाखे वा सुगन्धचन्दनं वारिमृत्तिका पात्रद्वयं सूत्रं सम्पाद्य, श्मशानदेशं गत्वा, पूर्ववत्स्नानादिकं कृत्वा, दाहदेशे दक्षिणाभिमुख आसीनः प्राचीनावीती देशकालौ सङ्कीर्त्त्य, गोत्रस्य प्रेतस्य प्रेतत्वविमुक्तये दाहजनिततापोपशान्तये ऽस्थिसञ्चयनं करिष्ये इतिसङ्कल्प्य, गोक्षीरेण सर्वाण्यस्थीनि सिञ्चेत् । ततो वाग्यतः शमीपलाशशाखाभ्यां

सर्वाण्यस्थीनि भस्मन उद्धृत्य, गव्येनाज्येनाभ्यज्य, चन्दनादिगन्धोदकेन सिञ्चेत् । ततस्तानि सर्वाणि नवीनमृत्पात्रे संस्थाप्य, मृन्मयपात्रान्तरेणापिधाय, सूत्रेण संवेष्ट्य, शुद्धभूमौ गर्त्तं कृत्वा, तद्गर्त्ते दक्षिणाभिमुख अस्थियुक्तमृत्पात्रसम्पुटं स्थापयेत् । ततो गर्त्तं मृद्भिः पूरयित्वा शैवालसंयुक्तं पङ्कपिण्डं सम्पुटोपरि दत्वा समं कुर्य्यात् । ततश्चिताभस्म जले प्रक्षिप्य चितादेशं गोमयेनोपलिम्पेत् । इत्यस्थिसञ्चयनप्रयोगः ॥

अथ द्वितीयदिने प्रथमदिनवत्पिण्डदानादिकं तत्र विशेषः । द्वितीयदिने चक्षुश्श्रोत्रनासिकोत्पत्त्यर्थं द्वितीयपिण्डदानं करिष्ये । तिलोदकतर्प्पणद्वयम् ॥ तृतीयदिने कण्ठमुखबाहुवक्षः समुत्पत्तये तृतीयपिण्डदानं करिष्ये । तिलोदकतर्प्पणत्रयम् ॥ चतुर्थदिने नाभिशिश्नगुदनिष्पत्तये चतुर्थपिण्डदानं करिष्ये । तिलोदकतर्प्पणच्चतुष्टयम् ॥ पञ्चमदिने ऊरुजानुजङ्घोत्पत्त्यर्थं पञ्चमपिण्डदानं करिष्ये पञ्चतिलोदकतर्पणानि ॥ षष्ठेऽहनि गुल्फपादाङ्गुलिमर्म्माद्यवयवोत्पत्त्यर्थं षष्ठपिण्डदानं करिष्ये । षट्तिलोदकतर्पणानि ॥ सप्तमदिने ऽस्थिमज्जाशिराप्रभृत्यङ्गोत्पत्त्यर्थं सप्तपिण्डदानं करिष्ये सप्ततिलोदकतर्पणानि ॥ अष्टमदिने नखलोमाद्युत्पत्त्यर्थमष्टमपिण्डदानं करिष्ये । अष्टतिलोदकतर्प्पणानि ॥ नवमदिने वीर्योत्पत्त्यर्थं नवपिण्डदानं करिष्ये । नवतिलतोयतर्पणानि ॥ दशमदिने क्षुत्पिपासानिवृत्त्यर्थं दशमपिण्डदानं करिष्ये । दशतिलो-

दकतर्पणानि ॥ प्रत्यहं पिण्डदानासम्भवे यथासम्भवं कार्य्यम् । ततः कर्त्तुरन्येषां सपिण्डानाञ्च यथाचारं वपनं स्नानम् यज्ञोपवीतधारणं दशरात्रधृतवस्त्रत्यागो गृहमार्ज्जनञ्च ॥

अथैकादशाहप्रयोगः । कर्त्ता प्रातः स्नात्वा, यज्ञोपवीतं धृत्वा, पूर्वदिने रात्रौ ब्राह्मणवरणं न कृतञ्चेत्तदा प्रातरेकोद्दिष्टब्राह्मणवरणं कुर्यात् । तद्यथा । कर्त्ता विप्रगृहं गत्वा शुचौ देश उदङ्मुखमुपविष्टं ब्राह्मणं प्राचीनावीती सव्यं जान्वाच्य दक्षिणाभिमुखो गोत्रस्य शर्म्मणो मम पितुः प्रेतस्याद्यादिमासिकश्राद्धम्भविष्यति तत्र भवता क्षणः कर्त्तव्यः । इतिक्षणं दद्यात् । ॐ तथेति प्रतिवचनम् । प्राप्नोतु भवान् । प्राप्नवानीति प्रतिवचनम् । प्रेतपित्रे नम इत्यभ्यर्च्य, प्रेतब्राह्मणस्य नखकेशश्मश्रुलोमानि वापयित्वा, ताम्रपात्रे तिलतैलं सोपस्करं दद्यात् । ततो गृहाद्बहिः शुचौ देशे दक्षिणाप्रवणाम्भूमिं परिकल्प्य, गोमयादिनोपलिप्य, प्रज्वलिताङ्गारैः परिशोध्य, तिलान्सर्षपान् तत्र विकिरेत् । स्वयं स्वसन्निहितज्ञातिर्वानवीनमार्त्तिकपात्रे पाकं कुर्य्यात् । तत्र वामपार्श्वे तिलतैलेन रक्षार्थं दीपं प्रज्वालयेत् । ततः कर्त्ता दक्षिणाभिमुखः कुशपवित्रपाणिः प्राचीनावीती कुशतिलोदकवस्त्रादीन्यादाय शय्यादानार्थं ब्राह्मणं वृणुयात् । गोत्रस्य शर्मणः प्रेतस्य मम पितुः प्रेतत्वविमुक्तिपूर्वकमक्षय्यपुण्यलोकावाप्तये शय्यादानप्रतिग्रहार्थं गोत्रं शर्म्माणं शाखाध्यायिनमेभिः करस्थोपचारैस्त्वामहं वृणे । वृतोऽस्मीति ब्राह्मणः । ततः शय्यादानप्रतिज्ञा । कर्त्ता

पूर्ववद्देशकालौ सङ्कीर्त्याद्यैकादशाहे गोत्रस्य शर्म्मणः पितुः प्रेतस्य प्रेतत्वविमोचनद्वाराऽक्षय्यपुण्यलोकावाप्तये सोपकरणशय्यादानमहं करिष्ये इति सङ्कल्प्य, प्रतिगृहीतारमुदङ्मुखं ब्राह्मणं स्वासने समुपवेश्य, प्राङ्मुखः शय्यां दद्यात् । तद्यथा । स्वपुरतः सोपकरणां शय्यां संस्थाप्य, मनुदैवत्यायै शय्यायै नमः इति शय्यां सम्पूज्य, ॐ ब्राह्मणाय नम इति ब्राह्मणं सम्पूज्य, कुशजलतिलानादाय, अद्यैकादशाहे गोत्रस्य शर्म्मणो मम पितुः प्रेतस्य प्रेतत्वविमोचनद्वाराऽक्षय्यपुण्यलोकावाप्तिं कामयमानो मनुदैवत्यां सोपकरणामिमां शय्यां गोत्राय शाखाध्यायिने शर्म्मणे तुभ्यमहं सम्प्रददे । ॐ प्रतिगृह्णामि । ततो दक्षिणाद्रव्यं गृहीत्वा शय्यादानसाङ्गतासिध्यर्थमिदमाग्नेयं हिरण्यं तुभ्यमहं सम्प्रददे । ॐ प्रतिगृह्णामीत्युक्त्वा शय्यां स्पृशेत् ॥ ततः काञ्चनपुरुषदानम् । पूर्ववत्सङ्कल्पवरणादिकम् । ॐ काञ्चनपुरुषाय नमः, ॐ ब्राह्मणाय नम इति सम्पूज्य, वासोयुक्तकाञ्चनपुरुषं ते ददामीति ब्राह्मणहस्ते जलं दत्त्वोदकेन काञ्चनपुरुषमभिषिच्य गोत्रस्येत्यादिप्राप्तिं कामयमान इत्यन्तमुक्त्वा, इमं फलवासस्सहितं काञ्चनपुरुषं गोत्राय शर्मणे ब्राह्मणाय तुभ्यमहं सम्प्रददे । काञ्चनपुरुषदानस्य सम्पूर्णफलावाप्तये आग्नेयं सुवर्णं दक्षिणात्वेन सम्प्रददे । ॐ प्रतिगृह्णामि ॥ अथ द्विजदम्पतीपूजनम् ॥ पूर्ववत्सङ्कल्पः । ॐ द्विजदम्पतीभ्यां नम इत्यभ्यर्च्य यथा सम्भवं पाद्यादिभिर्वस्त्राभरणगन्धादिभिश्च सम्पूज्य ब्राह्मणाय दद्यात् ॥

अथ वृषोत्सर्गः । "बार्हस्पत्यस्मृतौ 'वृषलक्षणम्'-लोहितो यस्तु वर्णेन पुच्छाग्रे यस्तु पाण्डुरः । श्वेतः खुरविषाणाभ्यां स नीलो वृष उच्यते" ॥ १ ॥ लक्षणान्तरम्- "चरणानि मुखं पुच्छं यस्य श्वेतानि गोपतेः । लाक्षारससवर्णश्च तं नील इति निर्दिशेत्" ॥ २ ॥ ब्राह्मणादिवर्णानुसारेण लक्षणम्-"वर्णतस्ताम्रकपिलो ब्राह्मणस्य प्रशस्यते । स्निग्धरक्तेन वर्णेन क्षत्रियस्य प्रशस्यते ॥ ३ ॥ काञ्चनाभेन वैश्यस्य कृष्णेनाप्यन्तजन्मन" इति कर्त्ताऽऽचम्य प्राङ्मुखः कुशेष्वासीनः कुशपवित्रपाणिः प्राणानायम्य, देशकालौ सङ्कीर्त्त्य, गोत्रस्य शर्म्मणः पितुः प्रेतत्वविमोचनद्वाराऽक्षय्यपुण्यलोकावाप्त्यर्थं सर्वोपकरणवत्सतरीचतुष्टयसहितं वृषोत्सर्ज्जनमहं करिष्ये इति सङ्कल्प्य, पञ्च भूसंस्कारान् कृत्वा स्थण्डिले लौकिकाग्निं विधिवत्स्थापयेत् । गोयज्ञवच्चरुं कुर्य्यात् । तस्य प्रयोगः प्रकृतिस्थालीपाकवत् । स्पष्टार्थं मन्दबोधाय पुनः किञ्चिल्लिख्यते । तूष्णीमग्नौ समिधमाधाय ब्रह्मोपवेशनं स्थालीपाकवत्पात्रासादनं पात्राणां वीक्षणं प्रोक्षणमिदम्भूमेरिति न्यञ्चकरणम् । इदम्भूमेरिति परमेष्ठीऋषिरनुष्टुप्छन्दोऽग्निर्देवता भूमिजपे विनियोगः । इदं भूमेर्भजामह इदं भद्रꣳ सुमङ्गलम् । परा सपत्नान्बाधस्वान्येषां विन्दते धनम् ॥ इमꣳ स्तोममर्हते इत्यादिभिः परिसमूहनम् । अस्य मन्त्रस्य कौत्सऋषिर्जगतीछन्दोऽग्निर्देवता परिसमूहने विनियोगः । इमꣳ स्तोममर्हते जातवेदसे रथमिव संमहेमा मनीषया । भद्रा हि नः प्रमतिरस्य सꣳसद्यग्ने सख्ये मा रिषामा वयं

तव ॥ १ ॥ भरामेध्मं कृष्णवामा हवीꣳषि ते चितयन्तः पर्वणा पर्वणा वयम् । जीवातवे प्रतराꣳसाधया धियोऽग्ने सख्ये मारिषामा वयं तव ॥ २ ॥ शकेम त्वा समिधꣳसा-धया धियस्त्वे देवा हविरन्त्याहुतम् । त्वमादित्याꣳ आवह तान् ह्युश्मस्यग्ने सख्ये मारिषामा वयं तव ॥ ३ ॥ हवि निर्वापः । तत्र विशेषः । अग्नये त्वा जुष्टं निर्वपामि । पूष्णे त्वा जुष्टं निर्वपामि । इन्द्राय त्वा जुष्टं निर्वपामि । ईश्व-राय त्वा जुष्टं निर्वपामि । तत अवहननम् । तुषविमोच-नम् त्रिःफलीकरणम् । त्रिःप्रक्षालनम् । पवित्रकरणम् । तण्डुलनिर्वापः । गोपयसि चरुश्रपणम् । प्रादक्षिण्येन मेक्षणेन मिश्रीकरणम् । तत अग्निकुण्डस्यैशानभागे स्थ-ण्डिलं कृत्वा तत्र रक्तपटमास्तीर्य्य तण्डुलान्विकीर्य्य वत्सतरीचतुष्टयसहितं वृषभमावाहयेत् । नन्दामावाहयामि । सुमनामावाहयामि । सुभद्रामावाहयामि । सुशीलामावाह-यामि । सुरभीमावाहयामि तस्यैशानभागे कलशं संस्थाप्य तत्र ॐ भूर्भुवःस्वः रुद्रमावाहयामीति रुद्रमावाह्य, नन्दा-दिरुद्रं षोडशोपचारैः सम्पूज्य, रुद्रसंहिताजपः कार्य्यः । "आवोराजा तद्वोवर्ग आज्यदोहानि देवव्रतानि चैषा रौद्री-नाम सꣳहितैतां प्रयुञ्जन् रुद्रं प्रीणाति" ॥ ततः शृते चरावभिघारणमुदगुद्वासनं प्रतिष्ठिताभिघारणमग्निप्रज्व-लनं परिस्तरणमास्तृतबर्हिषिस्थालीपाकासादनमिध्माधा-नमाज्यसंस्कारः स्रुगादिसंस्कारो बर्हिष्याज्यासादनं त्रिरु-दकाञ्जलिसेचनमनुपर्य्युक्षणं प्रपदवैरूपाक्षजपश्च । अस्य वसिष्ठऋषिः कालाग्निरुद्रो देवता प्रपद विरूपाक्षजपे विनि-

योगः । तपश्च तेजश्च श्रद्धा च ह्रीश्च सत्यञ्चाक्रोधश्च त्यागश्च
धृतिश्च धर्म्मश्च सत्वञ्च वाक् च मनश्चात्मा च ब्रह्म च
तानि प्रपद्यते तानि मामवन्तु भूर्भुवःस्वरोम्महान्तमात्मानं
प्रपद्ये । विरूपाक्षोऽसि दन्ताञ्जिस्तस्य ते शय्यापर्णे गृहा
अन्तरिक्षे विमितꣳहिरण्ययं तद्देवानाꣳ हृदयान्ययस्मये
कुम्भे अन्तः सन्निहितानि तानि बलभृच्च बलसाच्च
रक्षतो प्रमनी अनिमिषतः सत्यं यत्ते द्वादश पुत्रास्ते त्वा
संवत्सरेसंवत्सरे कामप्रेण यज्ञेन याजयित्वा पुनर्ब्रह्मचर्य्य-
मुपयन्ति त्वं देवेषु ब्राह्मणोऽस्यहं मनुष्येषु ब्राह्मणो वै
ब्राह्मणमुपधावत्युपत्वा धावामि जपन्तं मा माप्रतिजापी-
र्जुह्वन्तं मा माप्रतिहौषीः कुर्वन्तं मा माप्रतिकार्षीस्त्वां
प्रपद्ये त्वया प्रसूत इदं कर्म करिष्यामि तन्मे राध्यतां तन्मे
समृध्यतां तन्म उपपद्यताꣳ समुद्रो मा विश्वव्यचा ब्रह्मा
ऽनुजानातु तुथो मा विश्ववेदा ब्रह्मणः पुत्रो ऽनुजानातु
श्वात्रो मा प्रचेता मैत्रावरुणोऽनुजानातु तस्मै विरूपाक्षाय
दन्ताञ्जये समुद्राय विश्वव्यचसे तुथाय विश्ववेदसे श्वात्राय
प्रचेतसे सहस्राक्षाय ब्रह्मणः पुत्राय नमः ॥ आज्यभागहोमः ।
ततः प्रधानहोमः । अग्नये स्वाहा । इदं अग्नये न मम ।
पूष्णे स्वाहा । इदं पूष्णे न मम । इन्द्राय स्वाहा । इदं
इन्द्राय न मम । ईश्वराय स्वाहा । इदं ईश्वराय न मम ।
ततश्चतुर्गृहीतेनाज्येन सोमोराजानमित्यादिभिश्चतसृभि-

२ ३ १ २ ३ १२ ३ २ ३
श्चतस्र आहुतीः कुर्य्यात् । सोमꣳ राजानं वरुणमग्निम-

१ २ ३ २उ ३ १२ ३ १ २ ३ २ ३ १ २
न्वारभामहे । आदित्यं विष्णुꣳ सूर्यं ब्रह्माणं च बृहस्पतिं

३ १ २ ३ १ २ ३ १ २ ३ १-
स्वाहा। इदं सोमाय न मम। शुक्रं ते अन्यद्यजतं ते अन्य-
२र ३ १ २ ३ १ २ २ ३ २ ३ १- २र
द्विषुरूपे अहनी द्यौरिवासि। विश्वाहि माया अवसि स्वधा-
३ १ २ ३ २ ३ १२
वन् भद्रा ते पूषन्निह रातिरस्तु स्वाहा। इदं पूष्णे न मम॥
१ २ ३ १- २र ३ २उ ३ १ २ ३ १ २ ३ २
इन्द्रा पर्वता बृहता रथेन वामी ऋषआवहतꣳ सुवीराः। वीतꣳ
३ १ २ ३१ २ ३ १ २ ३ १- २र ३ १ २
हव्यान्यध्वरेषु देवा वर्द्धेथां गीर्भिरिडया मदन्ता स्वाहा।
२ ३ १ २ ३ १ २ ३ १- २र
इदं इन्द्राय न नम॥ आवो राजानमध्वरस्य रुद्रꣳ होता-
३ २ ३ १ २ ३ २ ३ १ २ ३ २ ३ २ ३ १ २
रꣳ सत्ययजꣳ रोदस्योः। अग्निं पुरातनयित्नोरचित्ताद्धिर-
३ १ २
ण्यरूपमवसे कृणुध्वं स्वाहा। इदं रुद्राय न मम। तत-
श्चरुणा स्विष्टकृद्धोमः व्याहृतित्रयहोमः। तूष्णीं समि-
दाधानमनुपर्य्युंक्षणमुदकाञ्जलिसेचनं यज्ञवास्तुकरणं व-
स्वाहुतिः। ततश्चतसृभिर्वत्सतरीभिः सहितं वृषभमग्नि-
समीपमानीय प्राङ्मुखं संस्थाप्य न्यासं कुर्य्यात्। यथा
वृषस्य मस्तके गायत्रीं न्यसेत्। गायत्र्या विश्वामित्रो
गायत्री सविता वृषस्य मस्तके न्यासे विनियोगः। ओ३म्
१ २ १ २ २ २ - १२
तत्सवितुर्वरेणियोम्। भार्गोदेवस्य धीमाहीर। धियो-
२ २ १ - १ २^१११११
योनःप्रचो१२१२। हुम्। आ२। दायो। आ२३४५। नम-
स्तौ इति ललाटे। नमस्तौ इति अग्निर्गायत्र्यग्निर्ललाटे
४५ २ ४ ५ १ २
न्यासे विनियोगः नमस्तौ॥ होम्नायि। ओजसा३यि।

१ ^ ३ ५ १ ७ – १ २ १ ^
गृणा२न्ता२३४यिदे । वा कृष्टया२ः । अमाये३ः । आ२-
३ ५२ २ २ ^ ३ १ १ १ १
मा२३४औहोवा । त्रमर्द्दया२३४५ ॥ १ ॥ रौरवयौधाजये
चक्षुषोः ॥ रौरवयौधाजययोः साम्नोरग्नींद्रावृषी बृहती-
छन्दः सोमो देवता चक्षुषोन्यांसे विनियोगः ॥ रौरवम् ॥
२२ २ १ ५ १ २ २ २
पुनानस्सोमा३धाराऽ२३४या । आपोवसानो अर्षस्यारत्न-
२ २ ^ ३२ १ २ २ १ २ २ २
धायोनिमृतस्य सा२यिदसायि। ओहा३उवा । उत्सोदेवो-
२ १ २ २ २ १ २ ४ ५
हिराऽ२३हायि । ओहा२उवा । णयया । औ३होवा ॥ १ ॥
२ २ २ २ १ ५ १ २ २२ २
ऊत्सोदेवोहा२यिरण्याऽ२३४याः । ऊत्सोदेवोहिरण्ययोदु-
२ २ ^ ३ २ १ २ २ १
हान ऊधर्द्दिवियम्मधूऽ२प्रियाम् । ओहा३उवा । प्रत्न॑स-
२ १ २ २ २ १ १ ४ ५
सधस्थमाऽ२३हायि। ओहा२उवा। सदात्। औ२३होवा ॥ २॥
२ १ ५ १ २ २
प्रत्न॑सधस्था२मासाऽ२३४दात् । प्रात्न॑सधस्थमासददाष्ट-
२ ^३२ १ २ २ १ २ २
छयन्धरुणम्वाजिया२र्षसायि । ओहा२उवा । नृभिर्द्धौतोवि-
२ १ २ २ २ १ २ ४ ५ ४
चाऽ२३हायि । ओहा३उवा । क्षणा । औ३होवा । होऽ५यि ।
३ २
डा ॥ ३ ॥ इति रौरवम् । दक्षिणनेत्रे यौधाजयम् । पुना-
२ ४ ५ २^३ ५ १२ १ ^ ३
३१ । ना३स्सो । म । धारा२३४या । आपो२ । वसा२ । न
२ . ३ ५ २२ १ २ १ २२ १ ^
आ३४५ । षा२३४सी । आरात्नधाः । यो । निमृताऽ२ ।

३ २ ३ ५ २ — १ ^ ३ २
स्यसा३४५यि। दा३४२सी। उत्सा२ः। दायिवो२। हिरा-
३ ५ ३ २ २ ४ ५ २^३
३४५। ण्या२३४याः॥ १॥ उत्सो३१। दे२वो। हि। रण्या-
५ १ २ १ ^ ३ २ ३ ५
२३४याः। ऊत्सो३। दायिवो२। हिरा३४५। ण्या२३४याः।
२ १ २ १ २ १ ^ ३ २ ३ ५
दुहान ऊ। धः। दिवियार२म्। मधू३४५। प्रो२३४याम्।
२ — १ ^ ३ २ ३ ५
प्रत्ना२म्। साधा२। स्थमा३४५। सा२३४दात्॥ २॥
३ २ २ ४ ५ २^३ ५ १ २
प्रत्ना३१म्। सा३ध। स्थम्। आसा२३४दात्। प्रात्ना३म्।
१ ^ ३ २ ३ ५ २र १ २ १ २
सधा२। स्थमा३४५। सा२३४दात्। आपार्छियाम्। ध।
१ ^ ३ २ ३ ५ २ — १ ^
रुणम्वा२। जिया३४५। षा२३४सो। नृभा२यिः। धौतो२।
३ २ ३ ५
विच्चा३४५। क्षा२३४णाः॥ ३॥ इति यौधाजयं वामनेत्रे॥
बृहद्रथन्तरे कर्णयोः। बृहद्रथन्तरयोर्भरद्वाजवसिष्ठावृषी
२
बृहतीछन्द इन्द्रो देवता कर्णयोर्न्यासे विनियोगः॥ आभि-
र र र १ १ २र र र र
त्वाशूरनोनुमोवा। आदुग्धाइवधेनव ईशानमस्य जगयः।
१ २ १ र २ १ ४ १ ५
सुवा२३र्दृशाम्। आइशानमा२३यिन्द्रा३। तास्थू२३४षा।
४र ५ ५ १
ओवा६। हाउवा। अस्॥ रथन्तरम्॥ वामकर्णे बृह-
२र र र र २ २र १र र
त्साम। औहोयित्वामिद्धिहवामहा३ए। सातौवाजा।
१ २^३ ५ १ २ ३र ४र ५ २ १
स्याकारा२३४वाः। तुवा३४। औहोवा। वृत्रायिषुवायि।

१ २ १ २ ३ ५ १र २ २ ३र ४र ५
द्रासा३१त्। पतिन्ना२३४राः त्वां काष्ठा३४। औहोवा
२- १ ४ ५ ५ १
सू२ अवा२३४। ताः। उहुवा६हाउ। वा। हस्। बृहत्साम
दक्षिणकर्णे ॥ ३॥ इति कर्णयोः ॥ सेतुसाममुखे ॥ सेतु-
साम्नो विशोक ऋषिस्त्रिष्टुप्छन्दः परमात्मा देवता मुखे
२र १रर २ २ १ १
न्यासे विनियोगः। हाउ३। सेतूꣳस्तर। ३। दुस्त। रान्। ३।
१र २र १र २२ २र २ र १
दानेनादानम् । ३। हाउ। ३। अह मस्मिप्रथमजाऋ-
२^१११ २र १रर २ २ १ १
ता२३स्या३४५। हाउ। ३। सेतूꣳस्तर। ३। दुस्त। रान्। ३।
१ र २र १र २ १ र २र १र २र
अक्रोधेन क्रोधम्। २। अक्रोधेन क्रोधम्। हाउ। ३।
र र र र १ २^१११ २र १रर
पूर्वं देवेभ्यो अमृतस्य ना२३मा३४५। हाउ। ३। सेतूꣳ-
२ २ १ १ २ १र २र २र
स्तर। ३। दुस्त। रान्। ३। श्रद्धयाश्रद्धाम्। ३। हाउ। ३।
२र र र र१ २^१११ २र १रर २
योमाददाति सइदेवमा२३वा३४५त्। हाउ३। सेतूꣳस्त-
१ २ १र र २ २र
र। ३। दुस्त। रान्। ३। सत्येनानृतम्। ३। हाउ। ३।
२ १ २^१११ २ऽ ऽ २र १र
अहमन्नमन्नमदन्तमाऽ२३द्मी३४५। आउ२हाउवा। एषा-
२र१२ १ १ २ १र २
गतिः। ३। एतदमृतम्। ३। स्वर्गछ। ३। ज्योतिर्गछ। ३।
१रर २र १र२ १ १११
सेतूꣳस्तीर्त्वाचतुराऽ२३४५ः ॥ इति मुखे ॥ देवव्रतानि
त्रीणि कण्ठे ॥ देवव्रतानां देवाउत्कृती रुद्रः कण्ठे न्यासे

१ २ १ १ २ १ १ २ १
विनियोगः । अधिप । ताथि । मित्रप ताथि । क्षत्रप । ताथि ।
१ २ १ १ २ – –१ २ १ २ २ १२ २
स्वप्पताथि धनपता२थि । ना२माः । मन्न्युना वृत्रहा सू-
२ २ १२२ १२ २ १२२ १ २२ १२२ १२ २ २२ १
र्य्येण स्वराद्यज्ञेन मघवा दक्षिणास्य प्रियातनू राज्ञा विशं
२२ २ २ १ २ २१२ २ २ १ २ १ २ २ १ २ १२
दाधार । वृषभस्त्वष्टा वृत्रेण शचीपतिरन्नेन गयःपृथिव्या-
२ १२ २ २२१ १ २२ २ १ २ २
स्तृणिकोग्निना विश्वं भूतम । भ्य भवो वायुना विश्वाः
२ १२ २ २ २१२ २ २ १२ २ २ २ २ १२
प्रजाअभ्यपवथा वषट्कारेणार्द्धभाक्सोमेन सोमपास्समि-
२२ २ १२ १२ २ २२ २ २ २ १२ १ २ २ २२
त्या परमेष्ठी । ये देवा देवाः । दिवि षदः । स्थ तेभ्यो वो
२ २ २२१२२२ १ २ १२ २ १२ २ २ २ १ २ १
देवा देवेभ्यो नमः । ये देवादेवाः । अन्तरिक्षसदः । स्थ
२ २ २२ २ २ २१२ २२ १ २ १२ २ २२ २ २ २ २ १
तेभ्यो वो देवा देवेभ्यो नमः । ये देवा देवाः । पृथिवीष-
२ १ २ २ २२ २ २ २१२ २२ १ २ १२ २ २२ २ २
दः । स्थ तेभ्यो वो देवा देवेभ्यो नमः । ये देवादेवाः ।
२ १२ १ २ २ २२ २ २ २२२ २२ १ २ १२ २ २२२
अप्सुषदः । स्थ तेभ्यो वो देवा देवेभ्यो नमः । ये देवादे-
२ २ १२ १ २ २ २२२२२ २१२ २२ १ २ १२२
वाः । दिक्षुसदः । स्थतेभ्यो वोदेवा देवेभ्यो नमः । येदे-
२२ २ २ २२ २ १ २ १ २ २ २२ १२२ २२१२ २२ १ २
वादेवाः । आशासदः । स्थ तेभ्यो वो देवा देवेभ्यो नमः ।
१ २ १२ २ १ २२ १ २ २ १ २२ १ २ २ १
अव ज्यामिव धन्वनो विते मन्युन्नयामसि मृड तान्न इह
२ १ २ १ २ १ २ २
अस्मभ्यम् । इडाऽ२३भा । य इदं विश्वं भूतम् । युयो३ ।

आऊ । वाऽ२३ । ना२३४माः ॥ ६ ॥ अधिप । तायि । मित्रप । तायि । क्षत्रप । तायि । स्वप्प तायि । धनपता-२यि । ना२माः । नम उततिभ्यश्चोत्तन्वानेभ्यश्च नमो नि-षङ्गिभ्यश्चोपवीतिभ्यश्च नमोस्यद्भ्यश्चप्र । तिदधानेभ्यश्च नमः प्रविध्यद्भ्यश्च प्रऽयाधिभ्यश्च नमः त्सरद्भ्यश्च त्सारिभ्यश्च नमः श्रि । तेभ्यश्च श्रायिभ्यश्च नमस्तिष्ठ-द्भ्यश्चोपतिष्ठद्भ्यश्च नमो यते च वियते च नमः पथे च विपथाय च । अव ज्यामिव धन्वनो विते मन्न्युन्नयामसि मृडतान्न इह अस्मभ्यम् । इडा२३भा । य इदं विश्वं भूतम् । युयो३ । आउ । वाऽ२३ । ना२३४माः ॥ ७ ॥ अधिप । तायि । मित्रप । तायि । क्षत्रप । तायि । स्वः पतायि । धन-पता२यि । ना२माः । नमोन्नाय नमोन्नपतयएकाक्षाय चावप-न्नादाय च नमोनमः । रुद्राय तीरसदे नमः स्थिराय स्थि-रधन्वने नमः प्रतिपदाय च पटरिणे च नमस्त्रियम्बकाय च क । पर्दिने च नम आश्रायेभ्यश्च प्रत्याश्रायेभ्यश्च नमः

२ १र २ १र २ १ २ १ र २ १ २र १ २
ऋव्येभ्यश्च विरिंफेभ्यश्च नमस्संवृते च विवृते च। अव
१र २ १ २र १ र २ १ २र १ र २ १ २ १
ज्यामिव धन्वनो विते मन्न्युन्नथामसि मृडताम्न इह अस्म-
२ १ २ १ र २ १
भ्यम् । इडा२३भा । य इदं विश्वम्भूतं । युयो३ । आउ।
१ ३ ५
वा२३ । ना२३४माः ॥ ३ ॥ इति कण्ठे । वामदेव्यं ला-
ङ्गले। वामदेव्यस्य वामदेवो गायत्रीन्द्रो लाङ्गूले न्यासे
३ र ४ २ ४र ५ १
विनियोगः । का५या । नश्चा३यित्रा३आभुवात् । ऊ ।
र २ १र २ १ २ र २ १ २^
तीसंदावृधस्स । खा । औ३होहायि । कया२३शच्चायि ।
३ र २ १ – १ २ ३ र
ष्ठयौहो३ । हुम्मा२ । वा२र्त्तो३५हायि ॥ १ ॥ का५स्त्वा।
४ २ ४ ५ १ २र १ २ १ २
सत्यो३मा३दानाम् । मा । हिष्ठोमात्सादन्ध । सा । औ-
र २ १ २^ ३ र २ १ – १
३होहायि । दृढा२३चिदा । रुजौहो३ । हुम्मा२ । वा२-
२ ३ र ४ २ ४ ५
सो३५हायि ॥ २ ॥ आ५भी । षुणा३स्सा३खीनाम् ।
१ २र १ २ १ १ र २ १
आ। विताजरायितॄ । णाम् । औ२३होहायि। शता२३-
२^ ३ र २ १ – १ २
म्भवा । सियौहो३ । हुम्मा२ । ता२योर५हायि ॥ ३ ॥
इति लाङ्गूले। व्रतपक्षौ स्कन्धयोः । व्रतपक्षसाम्नोः प्रजा-
२र
पतिस्त्रिष्टुबिन्द्रः स्कन्धयोन्यसि विनियोगः ॥ हाउ३।
१ २ २र २ १ २ १ २र^३ ४
हृंहृंहृंहृं । ३ । हाउ३ । इन्द्रन्नरौ । ने३मधि । ताहव-

५ २ १र २ १ २^ ३ ४ ५ २र १र
न्तायि । यत्पारियाः । युनज । तायिधियस्ताः । शूरोनृषा ।
२ १ २ ३ ४र ५ २र १र २ १र २र^
ता२श्रव । सश्वकामायि । आगोमतायि । व्रजेभ । जातु-
३४५ २र १ २ २ऽ २ ३ १
वन्नाः । हाउ२ । हॅंहॅंहॅंहॅं । ३ । हाउ२ । वा३ । ई२-
१११ २र १ १ २ २र २ १
३४५ ॥ हाउ२ । इहा । हॅंहॅंहॅं । ३ । हाउ२ । इन्द्रन्न-
२ १ २र^३४ ५ २ १र २ १ २र
रो । ने३मधि । ताहवन्तायि । यत्पारियाः । युनज । तायि-
३ ४ ५ २र१र २ १ २^ ३ ४र ५ २र १र
धियस्ताः । शूरोनृषा । ता२श्रव । सश्वकामायि । आगो-
२१र २र^३४५ २र १ १ २
मतायि । व्रजेभ । जातुवन्नाः । हाउ२ । इहा । हॅंहॅंहॅं ।
२र २ ३११११
३ । हाउ२ । वा३ । ई२३४५ ॥ इति स्कन्धयोः ॥ ओग्ना-
यीति उरुमध्ये । ओग्नायीति गौतमो गायत्र्यग्निः ऊरुमध्ये
४ २र र ^ १ –
न्यासे विनियोगः । ओग्नाइ । आयाहि३वोयितोया२ यि ।
१ – १र २र २ १ – १ – १
तोया२यि गृणानोह । व्यदातोया२यि । तोया२यि । नायि-
२र १ १^ ३ ५र र ३ ५
होतासा२३ । त्सा२यिबा२३४औहोवा । ही२३४षी ॥ इति
ऊरुमध्ये ॥ मनोजयिदितिहृदये मनोजयीतिदिश ऋषयो-
२र १ र
ऽनुष्टुब् ब्रह्मा हृदये न्यासे विनियोगः । हाउ । ३ । मनो-
२ १ २ १ र २ २ १
जयित् । ३ । हृदयमजयित् । ३ । इन्द्रोजयित् । ३ । अह-
२र २र १ २र १ २ १ २र १
मजैषम् । ३ । हाउ । ३ । यहृच्चौंहिरण्य । स्या । यद्दा व-

२२ १ २ २ १ २ १ २ १ २२१ १२ २२ १
र्चोगवामु । ता । सत्यस्य ब्रह्मणोव । चाः । तेनमासꣳसृ-
२२ १ २२ १२ २ १ २
जाम । साथि । हाउ । ३ । मनोजयित् । ३ । हृदयमज-
१ २ २ २ १ २२ २ऽ
यित् । ३ । इन्द्रोजयित् । ३ । अहमजैषम् । ३ । हाउ ।
२२ १ २ २ १ २ २ २ २ १ २२
३ । वा । ए । मनोजयिद्धृदयमजयिदिन्द्रोजयिदहमजैष-
२२ २ १ २ १ १ १ १
म् । ३ । ए । अहꣳसुवर्ज्योती२३४५ः ॥ ६ ॥ इति हृद-
ये । आजुहोता इति नाभौ । आजुहोतेति श्यावाश्वस्त्रि-
४२ ५ २ ४ २ १ २
ष्टुबग्निर्नाभौ न्यासे विनियोगः । आजुहोता । हविषाम-
— १ — १ २ २ — १
र्जया२ध्वा उवाऽ२ । निहोतारं गृहपतिं दधा२यिध्वा उ-
३ २ ३ २ १ २ २ २ १ — १ २
वा२३४ । इडा२३४स्पदाइ । नमसारातहाव्या२म् । सापर्य्य-
१ १ २ १ ४ ५ ४ ५
ता । याजतम्पाऽ२३ । स्तियोवा । आ५नोदहाइ ॥ ३४ ॥
इति नाभौ । तद्वोहोवा इत्यादीनि चत्वारि जान्वोः ॥
तद्वोगा इतिवर्गस्य रुद्रो गयत्री जान्वोर्न्यासे विनियोगः ।
५ २ ४ ५ १ ^ ३ २^ ३ ५ १ २२ २ २ १
तद्वौहोवा । गाया२ । सुतायिसा२३४चा । पुरुहूता । यसा-
२ — १ १ २ २^ ३ ५ १
त्वा१ना२यि । शंयत् । हा । औ३होइ । गा२३४वाइ । ना-
^ ३ ५२ २ २ १ १ १ १ १ ५२ २
२शा२३४औहोवा । ए३ । किने ऽ२३४५ ॥ १ ॥ तद्वोगाया ।
२ १ २ २ ३२ २ १ २ ३
सुताइसचा३ । पूरूऽ२३हूता३४ । हाहो३ । यासत्वा२३४-

५ २ १ २ २ – – १ ५
नाइ । शंयद्वा२३वे । नशौ२ । हौ२ । हुवो२३४ । वा ।
४ ५ ५ २ २ २ ५ २ २ १२
का५यिनो६हाइ ॥ २ ॥ तद्वोगायसुतेसचा६ए । पुरुहूता-
२२ १ २२ २ १ ७ २ ४ ५ २ ^
यसत्वने । पुरुहूता । यासत्वा२३ना२४यि । शंयत् ॥ गौवा
३ ५ १ ४ २ ५ ५
ओ २३४वा । ना२३शा३ । का३४५यिनो६हाइ ॥ ३ ॥ त-
२ २ २ ५ २ २ १२ १ २
द्वोगायसुतेसचा६ए । पुरुहूतायसत्वनाई । शंय्यद्वा२३वे ।
–२ २ २ १ १ ^ ३ ५२ २
ऐ२हो१ऽआ२३यिही । नशा२३ । का२यिना२३४औहोवा ।
३ १ १ १ १
ई२३४५ ॥ ४ ॥ इति जान्वोः ॥ श्यावाश्वान्धोगवे इति
ऊर्वोः । श्यावाश्वान्धीगवयोः श्यावाश्वान्धीगवावृषी अ-
३ २ २ ४
नुष्टुप्छन्द ऊर्वोर्न्यासे विनियोगः । पुरो३१ । जी३तो ।
२ ५ २ ४ ४ ५ १ २ २ २ १ –
वोअ । धा३सः । एहिया । सू । तायामादा । यि । त्वा२-
१२ – २ १२ २ ४ ३ ५ २२
यि । एहिया२ । अपश्वाना२श्वा३थी३ । ष्टा२३४ना । ऐहा-
– १२ – २ २ १२ २ ४ २ ५
२यि । एहिया२ । सखायोदायिर्घा३जी३ । ह्वा२३४५यो६हा-
५ २ ५ २ १२ २ २ १
यि । पुरोजितीवो४धासाः । सुताय । मादा२३या । हुम्मा-
– १ २ २ २ १ २ २ – १
२१ऽ२ । त्वे अपश्वान२श्व थिष्ठन । साखा३उवा । यो२दी ।
१ २ २ १ १ ४ ५ ४
घा२३जो । ह्वियाम् । औ२३होवा । हो५ई । डा । इत्यू-
र्वोः ॥ ५ ॥ उदुत्यमिति जङ्घयोः । उदुत्यमितिप्रस्कण्वो

४ ५ ४ ४
गायत्री सूर्यो जङ्घयोन्यासे विनियोगः । उदुत्यम् । ओ
१ ७ ^ ३ ५ २र १ १ २^३
हाइ । जा । तवे२दा२३४साम् । देवं वहा । तीकेता२३४-
५ १ र ५ १ २र १र १ १ ४
वाः । दा ऽ२३४ शौंहाइ । वायिश्वायसू । र्यांम् । औऽ२३हो-
५ ४
वा । होऽ५ऽयि । डा ॥ १६ ॥ इति जङ्घयोः । पावकान इति
पुच्छे । पावकानो मधुच्छन्दा गायत्री सरस्वती पुच्छे
५र र ४ ५ २ १ २ - १र
न्यासे विनियोगः । पावकानईया । सराख्वा१तीर । वाजे-
२ र २ १ २ - १ १ ^ ३ ५र र
भिर्वा । जिनाइवा१तीर । यज्ञा२३म् । वा२ष्टू२३४औहो-
२ १र ३ १ १ १ १
वा । धियावसू२३४५ः ॥ १४ ॥ इतिपुच्छे । हाउगावो ।
२र २र र र २ र र
इति रोमकूपेषु । हाउ । ३ । गावोहाउ३ । वृषभपत्नीहा-
२र र र र २ र र र २ र
उ३ वैराजपत्नीहाउ । ३ । विश्वरूपाहाउ । ३ । अस्मासुर-
र १र र - १
मध्वं२हाउ३ । तेमन्वतप्रथमन्नामगो२नाम् । त्रिस्सप्तप-
र - १ १र र र र - १ २र १
रमन्नामजा२नान् । ताजानतीरभ्यनूषता२क्षाः । आविर्भु-
र र - १ २र २र र र १
वन्नरुणीर्य्यशसागा२वाः । हाउ । ३ । गावोहाउ । ३ । वृ-
र र २र र र र २ र र र
षभपत्नीहाउ । ३ । वैराजपत्नीहाउ । ३ । विश्वरूपाहाउ । ३ ।
२ र र २ र २ २र
अस्मासुरमध्वं२हाउ । २ । अस्मासुरमध्वा३ं२हाउ । वा । ए ।

१र र २ १ रर र र १ रर १ र रर १र २
गावो वृषभपत्नीर्वैराजपत्नीर्विश्वरूपा अस्मासुरमध्वम् २ ।
रर १र र २ १ रर रर १ रर १ र रर १र २ ३
ए । गावो वृषभपत्नीर्वैराजपत्नीर्विश्वरूपा अस्मासुरमध्वा-
१ १ १
२३४५म् ॥ १५ ॥ इति रोमकूपेषु ॥ आतूनआ इति गुदे ।
आतूनइति वर्गस्य गौरी वित्यपालवैणवावृषी गायत्री
४र र २ १
छन्दो गुदे न्यासे विनियोगः । आतूनआ । द्रक्षुमाऽ२३-
२ १ रर १ २ १ –१ १ रर ३
न्ताम् । चायित्रंग्राभा२३४हाइ । संगृ२भाया । महाहस्ती-
५ १ – १ १ १ – ३ ५र
२३४हाइ । दक्षा२यिणायिना । महा२३ । हा२स्ता२३४औ-
र २ १ १ १ १ ५र र ४ ५
होवा । दक्षिणे३नाऽ२३४५ ॥ १६ ॥ आतूनइन्द्रक्षुमाता-
१ ^ ३ ५ २ ^ ३ ५ १ऽ २
म् । चित्राऽ२ग्रा२३४भाम् । संगृभा२३४या । मा२३हा३ ।
१ ^ ३ ५र र १ २ र^३ १ १ १ ४र र
हा२स्ता२३४औहोवा । दक्षिणेनाऽ२३३५ ॥ १७ ॥ आतू-
५ ४ ५ ५ २ १ र –१ २ १ र
नई । द्रक्षुमा६न्ताम् । चित्रङ्गाभ४सङ्गृभा२याचित्रङ्गाभ४-
१ २ २ ३ ५ रर १ १ र र
सम् । गृ । औ३होयि । भा२३४या । ऐहोइ । महाहस्तीद-
१ रर १ ३र ५ ४ ५
क्षाऽ२३होइ । औहो । वाहो२३४वा । णाऽ५यिनो६हाइ ॥ १८ ॥
५र र ५ २ १ र र २
आतूनइन्द्रक्षुमा६न्ताम् । चित्रं ग्राभ४सङ्गृ भाया । चि-
१ र १ ३ ५ ३ ५ रर १
त्रंग्राभ४सम् । गृऽ२३ । ई२३४हा । भा२३४या । ऐहोइ ।

१ र र १ २र १ ३र ५ ४
महाहस्तीदक्षाऽ२३होइ । औहो । वाहो२३४वा । णा५यि-
५ २ १र
नो६हाइ ॥ १९ ॥ इति गुदे ॥ राक्षोघ्नम् पादेषु ॥ यद्वाउ-
४ ५ १ र २र१ २र १र १
ऽ२३विश्पतिश्शिताः । सुप्रीतोमनुषोविशे । विश्वाइदा-
२ १२१२र^ ३ र२ १ २ ४ ५ ४
ऽ२३ग्नीः । प्रतिरक्षा । सिषेधता । औ३होवा । हो॒ऽ५ई ।
डा ॥ इति पादेषु ॥ आवोराजेतिहृदये । आवोराजेतिरु-
४र ५रर ४ ३
द्रस्त्रिष्टुप् रुद्रो हृदये न्यासे विनियोगः । आवोराजा । न-
२ ३ २ ३४५ १ २र १ २ २
मध्व । रस्यरुद्राम् । हो । ता । राम् । स । त्ययजा३म् ।
२^३४ ५ २ १ १ २ ३ २^ ३ ४ ५ १
रोदसीयोः । अग्निम्पु । रा । तनयि । त्नोरचित्तात् । हिर-
२ १ २ १ २ २ ४
ण्यरू । पा३मव । सा३४ऽ३यि । का३र्णु५ध्वा६५६म् ॥
इतिहृदये ॥ तद्वोहोइतिशिरसि । तद्वोहोइतिवर्गस्य रुद्रो
५र ४ ५ १
गायत्रीछन्दः शिरसि न्यासे विनियोगः । तद्वौहोवा । गा-
^ ३ २^ ३ ५ १ २रर २ १ २ — १
या२ । सुतायिसा२३४च्चा । पुरुहूता । यसात्वा१ना२ । शं-
१ २ २^ ३ ५ १ ^ ३ ५र र
यत् । हा । औ३होइ । गा२३४वाइ । ना२ शा२३४औहोवा ।
२ १ १११ ५र र २
ए३ । किने२३४५ ॥ १ ॥ तद्वोगाया । सुताइसचा३ ।
१ र र ३र २ १ २ ३ ५ २ १ २
पूरु२३हूता३४ । हाहो३ । यासत्वा२३४नाइ । शंयद्वा२३वे ।
२ — — १ ५ ४ ५
नशौ२ । हौ२ । हुवो॒ऽ२३४ । वा । का५यिनो६हाइ ॥ २ ॥

५ र र र ५ २ र १र २८ १ २रर १ ७
तद्वोगायसुतेसचा६ए । पुरुहूतायसत्वने । पुरुहूता । यास-
२ ४ ५ २ ^ ३ ५ १
त्वाऽ२३ना३४यि । शंयत् । गौवा ओ २३४वा । नाऽ२३-
४ २ ५ ५ र र र ५
शा३ । का३४ऽ५यिनो६हाइ ॥ ३ ॥ तद्वोगायसुतेसचा६ए ।
२ र १र १ २ — २
पुरुहूतायसत्वनाइ । शंयद्वा२३वे । ए२हो१ऽआऽ२३यिही ।
२ १ १ ^ ३ ५र र ३ १ १ १ १
नशाऽ२३ । का२यिना२३४औहोवा । ई२३४५ ॥ ४ ॥
इतिशिरसि ॥ आज्यदोहं शिखायाम् । आज्यदोहानाम-
ग्निर्वैश्वानरस्त्रिष्टुप् वैश्वानरो देवताशिखायां न्यासे विनि-
२र २र ३ ४र ५ २र १र २
योगः । हाउ । ३ । आज्यदोहम् । ३ । मूर्द्धानंदायि । वा३-
१ २ ३ ४ ५ २र १र २ १ र २र^३ ४ ५
अर । तिम्पृथिव्याः । वैश्वानराम् । ऋतआ । जातमग्नीम् ।
२ १ २ १ २ ३ ४र ५ २र १
कविंꣳसम्रा । ऽजा३मति । थिजनानाम् । आसन्नःपा ।
२ १ २ ३ ४र ५ २र २र^ ३ ४र ५
त्रां३जन । यन्तदेवाः । हाउ । ३ । आज्यदोहम् । २ ।
२र^ ३ ४ ५ २र २र १ २ २र २र
आज्यदो५हाउ । वा । ए । आज्यदोहम्२ । ए । आज्य-
१ ३ १ १ १ १
दोहा२३४५म् ॥ १६ ॥ इति शिखायाम् । प्रथमं देवव्रतेन
कवचम्मध्यमेन नेत्रं तृतीयेनास्त्रमेवं विन्यस्तशरीरो वृषभो
रुद्ररूपो भवति । ततो वत्सतरीणां देहेषु विन्यासं कुर्य्यात् ।
ब्रह्मणे नमः शिरसि । विष्णवे नम उदरे । महादेवाय
नमः ललाटे । अश्विभ्यां नमः कर्णयोः । चन्द्रसूर्य्याभ्यां

नमः नेत्रयोः । वैवस्वताय नमः पृष्ठे । सप्तसागरेभ्यो नमः पादेषु । सप्तर्षिभ्यो नमः रोमकूपेषु । सर्वाभ्यो देवताभ्यो नमः सर्वाङ्गे । तत ईशानभागस्थितकलशोदकेनैकवृषभसाम्ना वृषभं स्नापयित्वा शेषोदकेन वत्सतरीः स्नापयेत् ।

१र र २र र १र र २र १ र २ १ २ १
हाहूम् । ३ । योवा । ३ । योवाहायि । ३ । यएकइद्विद-
२र १र२ १ र २ १र १२ १ र २ र १ २र १र२ १ र
यते । एकं२समैरयद्वृधे । वसुमतायदाशुषे । एकं२समै-
२ १र १रर २र १ २ १र२र१२र१ र २ १ र
रयन्महे । ईशानोअप्रतिष्कुतः । एकोवृषाविराजति । इन्द्रो-
२ १ १रर १र र १र र २र १र ऽर
अङ्ग । हाहूम् । ३ । योवा । ३ । योवाहायि । २ । योवा३-
२ ३ १ १ १
हाउ । वा३ । ई२३४५ । ततो नूतनवस्त्रेण वृषभमाच्छाद्य तिलकाकृतिपटं सत्यमित्थावृषासोमाभ्यामिति शिरसि स्थापयेत् ।

५ ४ ५ ४र ४ ४ १ र र
स्थापयेत् । सत्यमित्थावृ । षा५यिदसायि । वृषजूतिर्नो-
— १र ७ — २र १ १ २
विता२ । वृषाह्युग्राशृ्णिवषा२यि । परावतायि । वृषो२३र्वा ।
२ १ २ १ ५ र र
वतायिश्रू२३ता३४३ः । ओ२३४५ई । डा । वृषासोमा ।
२ — १ — १ २ २ १ २ ३ ५
द्युमा२ं आसा२यि । वृषादेवा३हा३यि । वार्षत्रा२३४ताः ।
१ २ ऽ २ १ २र १ २
वृषाधस्मी३ । ई३या । णायिदध्रिषे । इडा२३भा३४३ ।
१
ओ२३४५ई । डा ॥ २ ॥ इति स्थापनं ॥ ततो वृषं वत्सतरीश्च यथासम्भवमलङ्कुर्य्यात् ॥ ततो वृषभस्य दक्षिणे

पार्श्वे मानस्तोक इति मन्त्रेण चन्दनेन शलाकया चिन्हं कुर्य्यात् ॥ मानस्तोके तनये मा न आयौ मा नौ गोषु मा नो अश्वेषु रीरिषः । वीरान्मा नो रुद्र भामि नो वधीर्हं-विष्मन्तः सदमित्वा हवामहे ॥ वामपार्श्वे वृषाह्यसीति

४ ५र ४ २ १र

मन्त्रेण चक्राकारेण चिन्हं कुर्यात् ॥ वृषाहिया । सिभा-

२ २ १ र २ ३ २ १ २

नूर३ना । द्युमतंत्वाहावा१माहा२३४यि । पवा२ । मानसु-

१ ५ ३ ५

वो२३४वा । हू२३४शाम् ॥ इति कर्मसमाप्तेः परं तप्तलो-हशलाकया त्रिशूलं चक्रञ्च चिन्हमन्येन कारयेत् ॥ ततो वृषभेण वत्सतरीमनुक्राम्य तामनामिकया स्पृष्ट्वा ऽनुम-न्त्रयेत् काम्यासीति मन्त्रेण । काम्यासि प्रियासि हव्या-सि इडे रन्ते सरस्वति महि विश्रुति ॥ ततो वृषभवत्सत-रीणां पुच्छेषु तर्प्पणम् । अग्नेः पश्चात्प्राङ्मुखं वृषं वत्स-तरीश्च संस्थाप्य देशकालौ सङ्कीर्त्त्य, प्राचीनावीत्ती, अ-मुकगोत्रस्यामुकशर्मणः पितुः प्रेतस्य प्रेतत्वविमोचनद्वारा-ऽक्षय्यपुण्यलोकावाप्त्यर्थं वृषभवत्सतरीपुच्छे तर्प्पणं क-रिष्ये । ताम्रपात्रस्थं तिलजलमादाय पुरुषसूक्तेनोपवीति

२ १ २ २ १ र र

ना तर्पणं कुर्य्यात् । उहु वा हाउ । ३ । सहस्रशीर्षाः पुरू

२ २ र १ २१ २ १ र २ १र

२३षाः । सहस्राक्षः सहस्रा२३पात् । सभूमिꣳसर्वतोवा

२ १ २ १र २ २ १ २

२३त्त्वा । अत्यतिष्ठद्दशांगू२३लाम् । उहु वा हाउ । २

